॥ श्रीः ॥

# शबरी सपर्या
तथा
# मुरारि मुरळी


लेखकः

डा० वि. आञ्जनेय शर्मा,

तिरुपतिः (आ.प्र.)


1979



Prof Satyavrat
with regards.
1.7.82

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीः ॥

# शबरी सपर्या
तथा
# मुरारि मुरळी


लेखकः

डा० वि. आञ्जनेयशर्मा,

तिरुपतिः (आ.प्र.)


1979



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

INTRODUCTION

In this Sanskrit playlet of mine, *Sabari-Saparya* the aged and long-living Sabari symbolizes the perpectual stream of sense-objects, Sabda, Sparsa, etc. to which usually everyone yields, before offering himself to God, though there are sparse exceptions to this universal phenomenon. The fruits eaten and offered to Rama by Sabari stand for the souls stung by the sense-objects before they resign themselves to the Supreme. And perhaps, the sting sweetens them for Him, 'even if it were not to their liking'.

Thus in the Ramayana the introduction of Sabari whom Rama meets on his way to Mt. Risyamuka, as that of other sages like Sarabhanga and Sutikshna whom he meets before the abduction of Sita, heightens the spiritual bearing of the Epic's hero, as a perfect incarnation of Divinity in human form. Hence the episode of Sabari is narrated in most versions of the Ramayana. And it needs no apology with regard to its relevance to the main plot of Ramayana, especially in view of the fact that in our tradition every bit of

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

literature is ultimately given a spiritual significance.

I have introduced here the Viswarupa of Rama revealed to Sabari and also to Lakshmana whom I have portrayed as the ideal offering to the Lord, since he is totally dedicated to the service of Rama right from his birth.

Thus I have conceived of this plot in order to bring out the everlasting significance of Sabari's offering as illustrating and justifying the majority way of life, with a convincing simplicity.

A few observations on the silvan beauty in Nature are also included through the dialogue of Rama and Lakshmana. Vanadevatas are the other characters.

* * *

The *Murari-Murali* is a short poem on Krishna's Flute. The outline of its theme is: Of all arts, the fine arts are beautiful; of the fine arts, the music; and of all music, the notes of Krishna's flute. His gita (song) sung for gopis of Brindavan is a sutra pregnant with the mystic philosophy of the supreme Self and the Gita (explained to Arjuna in the Mahabharata)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

is only its exposition, The blissful Krishna is his music and vice-versa. It resounds even to-day in the rivers, clouds, birds and leaves, awakening tha *Nadatman* of Nature. Let His music touch the cords of my heart's Veena, so that I enjoy its waves as a paramahamsa.

It is hoped that this small play and this short poem would be received well by the literary world.

I am thankful to the editorial board of the Sudharma, Mysore for serialising them in the daily and bringing them out in a book form.

Dr. V. A. SHARMA

## CONTENTS



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# शबरीसपर्या

सूत्रधारः — स्वप्रातिसाधनतयाऽत्र मनुष्यलोके
वृत्तिं द्वयीं समुपकल्पितवान् प्रभुर्यः ।
अर्थोपभोगरहितां सहितां च तेन
वन्दे तमिष्टफलदं परमात्मसंज्ञम् ॥

मारिषः (उपगम्य) किमित्यार्येणाधुना अपराह्णे दैवस्मरणं क्रियते ? किमद्यावधि उदरं न पूरितम् ?

सूत्र (तं विलोक्य दरहासेन) आगम्यतां, बुभुक्षा मां कबळयति । अशनाय किञ्चिदस्ति वा न वेति गृहिणीं मे तावत् पृच्छामि । (नेपथ्याभिमुखमवलोक्य, सादरम्) आर्ये इतस्तावत् ।

नटी (आगम्य) इयमस्मि ।

सूत्र अशितुं किमप्यस्ति वा ? बुभुक्षितोऽस्मि ।

नटी — (सवैलक्ष्यम्) इतः पूर्वमेव अविदितभवदागमनवेलया अपत्येभ्यः फलहारं* दत्त्वा मयाऽपि किञ्चिद् भुक्तम् । सर्वमवसितप्रायमिति मन्ये । यदि किञ्चिदवशिष्टं भवेदिति गत्वा द्रष्टव्यम् ।

---

*आन्ध्रभाषायां फलहार शब्दः व्यवहारे अल्पाहारार्थकः प्रयुज्यते । तथापि फलाहार इति भाव्ये फलहार इति प्रयोगः वर्णलोपन्यायेन स्वीकरणीयः ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सूत्र—(सक्रोधम्) कथं भर्तारं मामप्रतीक्ष्यैव भुक्तं त्वया ? तव च यदुच्छिष्टं तन्मया भोक्तव्यम् ।

नटी—(सविस्मयं) अहो दुरभिमानः, विज्ञापितमेव भवदागमनवेला न विदितपूर्वेति । कथमुच्छिष्टम् ? अवशिष्टमिति किलावदम् । अन्यथा कथमस्मिन् अकाले तव बुभुक्षा उपशाम्यति ? उच्छिष्टमेव वा भवतु मायामानुषवेषायैव श्रीरामचन्द्रपरब्रह्मणे चर्वितचराण्यपि फलानि शबर्यां भक्त्युपहृतानि । यथोक्तं पाद्मे —

फलानि च सुपक्वानि मूलानि मधुराणि च ।
स्वयमास्वाद्य माधुर्यं परीक्ष्य परिभक्ष्य च ॥
पश्चान्निवेदयामास राघवाभ्यां दृढव्रता ॥ इति ।

सूत्र—(प्रसन्नमुखेन अनुमोदमानः)
किञ्च उदरहेतोरपि भगवदर्पणबुद्ध्या अद्यमानं तदनुग्रहकारणं भवति ।

एवं हि शिष्टैः समाम्नायते—

आत्मा त्वं गिरिजामतिः परिजनाः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रासमाधिस्थितिः ।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरः
यद्यत् कर्म करोमि तत्तदखिलं शम्भो तवाराधनम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्या पर्यायस्तव भवतु यन्मे विलसितम् ॥" इति ।

किं पुनरिष्टदैवनिवेदितं उच्चिष्टं वा अन्यद्वा ?

हन्त, महती मे विस्मृतिः क्षुधार्तस्य ।

सम्यगनुबोधितोऽस्मि भवत्या (विद्यालयोत्सवेषु प्रचलत्सु) यदस्मिन्नेव सायाह्ने श्रीमता आञ्जनेय-शर्मणा प्रणीतं शबरीसपर्यानामकं रूपकं प्रयोक्तव्यम् । तदर्थमेवायं मारिषोऽप्यागतः । मया त्वन्यत्र कार्य-तश्चिरयता कृतश्चायान् कालविक्षेपः । तदेहि गच्छामः । अपि च—

हृतोऽहमनया वाचा तव युक्तिप्रसिद्धया ।
यथायं सानुगो रामः शबर्या भक्तिसम्पदा ॥

(सर्वे निष्क्रान्ताः)

इति प्रस्तावना

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

[श्रीरामलक्ष्मणौ मतङ्गाश्रममार्गेण गच्छन्तौ प्रविशतः]

श्रीरामः—(सौमित्रिमवलोक्य)

पश्य लक्ष्मण मन्येऽहं पुरतो दृश्यतेऽनघः ।
अयमेवाश्रमश्रेष्ठः मतङ्गस्य महामुनेः ॥

पम्पासरस्सनाथश्च बहुपुष्पितपादपः ।
धूतपापकदम्बेन कबन्धेनोपवर्णितः ॥

लक्ष्मणः—(पश्यन्) नूनमयमेव सः ।

(आत्मगतम्) प्रियं मे यदग्रजस्य सीताविरहकर्शितं मनः किञ्चिदिवावर्जयितुं शक्नोति पम्पासरस्तरङ्गान्दोलितेन फुल्लकुसुमसौरभवासितेन च मन्दमारुतेन सुभगोऽयं वनोद्देशः । कबन्धेन कथितं सत्यमेव ।

"सायाह्ने विचरन् राम सुतरून् माल्यधारिणः ।
शीतोदकं च पम्पाया दृष्ट्वा शोकं विहास्यसि ॥" इति ।

(नेपथ्ये)

वनदेवताः—(परस्परम्) इमौ तौ श्रीरामलक्ष्मणौ सिद्धशबरीमनुग्रहीतुं इदं मतङ्गाश्रमस्थानं प्रविशत :—

विदेहजान्वेषणयुक्तचित्तौ तदर्थमेवात्र वने भ्रमन्तौ ।
कबन्धनिर्दिष्टपथावतारौ निजां प्रपन्नां शबरीं दिदृक्षू ॥
तस्याः कुटीरं प्रतिगन्तुकामौ भक्तानुरागव्यसनौ कृपालू ।
जनुःपवित्रीकृतभानुवंशौ इमौ सुमित्रातनयश्च रामः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सरोजबन्धुप्रतिमानतेजसौ जटाकलापानुमितर्षिवर्तनौ ।
तथापि कोदण्डनिषङ्गशोभितौ वसन्तकामाविव देह-
धारिणौ ॥

घनश्यामो रामो धवलवपुषाऽस्याप्यवरजो-
ह्यटव्यामेतस्यां सकुतुकमटन्तौ जनयतः ।
अपूर्वं साहित्यं कुवलयसिताम्भोजमहसो-
र्व्यवस्था राहित्यादधिकतररामण्यकमयम् ॥

(श्रीरामलक्ष्मणावुद्दिश्य प्रकाशम्) स्वागतं श्रीराम-
भद्राय सलक्ष्मणाय ।

श्रीरामलक्ष्मणौ—हन्त, वनदेवताः स्वागतं व्याहरन्ति ।
(नेपथ्याभिमुखं) अनुगृहीतौ स्वः ।

श्रीरामः—(पम्पातीरमुपगम्य, निध्यायन्)

पश्य लक्ष्मण संश्रित्य पम्पायाः पश्चिमं तटम् ।
विराजन्तीं वनान्तस्य शोभां नयनहारिणीम् ॥

परस्परं परिष्वक्तशाखाभिस्तरुराजिभिः ।
महाद्रुमाग्रसंसक्तशिखरैश्च गिरिव्रजैः ॥

गवाक्षिता दिशः सर्वा राजन्ते सौधकुड्यवत् ।
अभ्रंशा समतीर्था च पम्पा सञ्जातवालुका ॥

अशर्करा कर्कशा च हरति प्रसभं मनः ।
अशैवलं प्रसन्नं च सलिलं स्वादुशीतलम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चूतान् कुसुमितान् पश्य कूजत्पिकगणाकुलान् ।
असमीपगतं चापि वसन्तं ह्वयतोऽथवा ॥

सर्वकामफला वृक्षाः पुष्पिताश्च मधुस्रवाः ।
सन्ति सर्वेऽत्र ऋतवो यथा चैत्ररथे वने ॥

परं दृष्ट्वा त्विमां पुण्यां शोभमानां वनस्थलीम् ।
स्मारितोऽहं प्रियां सीतां पुष्पाभरणभूषिताम् ॥

पत्रं पुष्पं फलं तोयं रमणीयं खगं मृगम् ।
सीतावचनसंरम्भात् समानीतं त्वया मुदा ॥

चित्रकूटे पञ्चवट्यां चासौ सौन्दर्यलालसा ।
दृष्ट्वा ममापि वैदेही दिशन्ती प्रत्यनन्दत ॥

गङ्गास्रोतः परिसरभुवश्चित्रकूटस्य पार्श्वे
गोदावर्यास्तटमनु यथा पञ्चवट्याः प्रदेशाः ।
पम्पारण्यं रमयति भृशं चित्तमेवं तथापि
शोभाभोगो जनकतनयाऽभावतस्त्रुट्यतेऽस्य ॥

लक्ष्मणः—(आत्मगतं) धिक् कष्टम् !

सर्वथापि तु चिन्तैनं न जहाति वियोगजा ।

अथवा अहमेव कठिनहृदयः । सर्वेऽयं प्रकृतिरपि स्थावरात्मिका अस्य दुःखेन दुःखितैव । अत्र तावत्

इदं नीलघनाभोगं दूरवर्षन्नवाम्बुदम् ।
आर्य शोकोदयद्बाष्पकलुषं दृश्यते नभः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवतु —

दृष्टिमस्यान्यतो नेतुं यतिष्येऽहं यथामति ॥

(प्रकाशम्) अग्रज, इतो दृश्यतां–दर्शनीयोऽयमाश्रम-कुटीरनिवेशः। उच्चावचप्ररोहेऽपि काननेऽस्मिन् प्रस्रवणसुभगो गिरिसानौ यथाप्रदेशं रोपिताभिश्चित्र-पुष्पलताभिः सनाथैर्निकुञ्जैश्च, चतुरश्रशोभिनीभिर्वृक्ष वाटिकाभिश्च, बालपादपलेखारुचिर पार्श्वाभिर्वीथि-काभिश्च परिगतेनोपवनेन विलसितः कलास्फूर्त्या चित्रगत इवालक्ष्यते। मन्ये आवां शबर्याः पर्णशालां प्राप्तौ।

श्रीरामः — (विलोक्य सानन्दम्) सौमित्रे, सम्यग्वर्णितं त्वया।

(उभौ पर्णशालासमीपं गच्छतः)

(नेपथ्ये शबरी गायति)

शबरी—शरणं भव जनरञ्जन।
सीतानाथ निरञ्जन ॥ शरणम्

कौसल्या प्रियनन्दन। भक्तावन हरिचन्दन।
संकीर्तयेऽहं श्रीराम। जगन्मङ्गलं तव नाम ॥ शर....
भासि हृदये योगिनाम् यासि च धुरि वियोगिनाम्।
महती करुणा स्वीकृते एहि संप्रति मम कृते ॥शर....

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

देहि मे तव दर्शनम् पावनं भवकर्शनम् ।
चरणपद्ममरन्दधारास्फुरित मन्दाकिनीपूर ॥ शर...

निजपादरजः परिपूततपोधनकुञ्जरदारमुदारहृदम् ।
कृतकेकयराजसुतावचनं करुणानिलयं कलये सततम् ॥

वरभास्करकुलवारिधिशशिनं शशिवदनम्
मृदुशैशववचनामृत परितोषित जनकम् ।
वसुधाप्रियतनया भृश विरहाकुलहृदयं
शरखण्डितखरदूषणमनिशं हृदि कलये ॥

लक्ष्मणः—(राममुद्दिश्य) कुटीरान्तः गीतध्वनिरिवायाति । शबर्या गायन्त्या भवितव्यम् । कण्ठस्वरः पटीयान् श्रूयते । किन्तु सा वृद्धेति किल श्रुतम् ?

श्रीरामः— अस्याः योगप्रभावादेवं स्यात् ।

(एवं भाषमाणौ तौ पर्णशालाबहिर्द्वारसमीपमागच्छतः)

लक्ष्मणः—जलसेकमसृणा रङ्गवल्लिकालंकृतेयं द्वारभूमिः ।

श्रीरामः—वृक्षपर्णैः नीरन्ध्राच्छादितोपरिभागा हरितचूत-दळमालामण्डिततोरणा सुसम्मृष्टतला बद्धकटा च राजते पर्णशाला ।

लक्ष्मणः—प्रशान्तपरिसरा च विविक्तान्तर्णिलया ।

श्रीरामः—प्रायेण ध्यानमनुतिष्ठति शबरी ।

(उभौ आन्तरं कवाटदेशं प्रविशतः)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लक्ष्मणः—(शबरीं दृष्ट्वा राममुद्दिश्य)

इयं सा सिद्धशबरी वृद्धा च चिरजीविनी ।
विनिवृत्तेन्द्रियोद्योगा ध्यानान्तर्मुखमानसा ॥

(शबरी शनैः लोचने उन्मीलयति)

श्रीरामः—(जनान्तिकम्) सौमित्रे !

सरोजिनीकुट्मलिताम्बुजापि
यथा प्रभाते भजते विकासम् ।
तथा निमीलन्नयनापि चेयम्
केनापि बोधेन विबुद्धनेत्रा ॥

लक्ष्मणः—(जनान्तिकम्) तवागमनेनैव अन्तर्बोधवती नेत्रे उन्मीलितवती ।

शबरी -(श्रीरामं प्रेक्ष्य आत्मगतम्) अहो, इतः पूर्वमेव ध्यानसमये अन्तश्चक्षुर्गोचरो नीलमेघश्यामलोऽयमुन्मीलितनेत्राया अपि पुरस्ताद्दृश्यते । किमयं द्यामपि योगकृतः साक्षात्कारः ? अथवा सत्यमेवागतो रामः सलक्ष्मणः इमां मे पर्णशालाम् ? भवतु पृच्छामि । (सानन्दमुत्थाय प्रकाशम्) कौ युवां पुरुषर्षभौ ?

लक्ष्मणः— अयोध्यावासिनावावां कार्येण वनगोचरौ ।

दाशरथ्येष श्रीरामः कौसल्यानन्दवर्धनः ॥
शरणागतसन्त्राणः सीतानाथो ममाग्रजः ।

(इति श्रीरामं दर्शयति)

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीरामः—अमुं जानीहि सौमित्रीं मम प्रियतमानुजम् ॥

(इति लक्ष्मणं दर्शयति)

शबरी—(स्वगतम्)

सत्यमेवागतो रामः, हृना सीतेति मे श्रुतम् ।
(क्षणकालं चिन्तामनुभूय, प्रकाशम्) प्रियं मे
येऽधुना दिवमारूढाः यांश्चाहं पर्यचारिषम् ॥
येषां प्रसादलब्धश्च ममायं ध्यानसंविधिः ।
मतङ्गवनवासैस्तैरुक्ताहमृषिभिः पुरा ॥
" आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ।
स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः ॥
तं च दृष्ट्वा वरान् लोकानक्षयांस्त्वं गमिष्यसि ॥ "

इति । (कतिपयान् क्षणान् रामं पश्यन्ती शबरी ध्यानमातिष्ठति)

लक्ष्मणः—(स्वगतम्) अहो समाधिसौलभ्यं शबर्याः

रामं दृष्ट्वा पुनरपि महानन्दसान्द्रं मनोऽस्याः
कण्ठो रुद्धो नयनयुगलं मोदबाष्पाम्बुपूर्णम् ।
गात्रं चैतच्चलनरहितं सक्तरोमाञ्चजालं
प्राणायामस्तिमितकरणारूढयोगेव चैषा ॥

[शबरी पुनः संज्ञां लब्ध्वा श्रीरामपादयोः पतति । ततः पाद्यादिकं च यथाविधि समर्पयति । तदेतत् सर्वं लक्ष्मणः स्वगतेन वर्णयति ।]

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुहूर्तमेवमास्थाय ततः स्वप्नादिवोत्थिता ।
सहर्षं रामचन्द्राय साष्टाङ्गमकरोन्नमः ॥
नयनसमुदितानन्दाश्रुभिस्तस्य पादौ
पुनरपि कलशस्थैरम्बुभिर्मार्जयित्वा ।
तदमृतपृषतैः संप्रोक्ष्य च स्वोत्तमाङ्गं
धृतनिजवसनेन क्लिन्नतां चापनिन्ये ॥
त्वरयाथ ददौ पीठं पलाशादिविनिर्मितम् ।
तस्मिंश्चापि सुखासीनो रामः सिंहासनोचितः ॥
प्रत्यहं देवतार्चायाः क्लृप्तैरारामभवैः ।
नानाविधैश्च कुसुमै रामः संपूजितस्तया ॥

शबरी—(राममुद्दिश्य) श्रीरामचन्द्र !

मया तु विविधं वन्यं सञ्चितं पुरुषर्षभ ।
फलं मूलं च सुस्वादु पम्पायास्तीरसंभवम् ॥
किञ्चित् किञ्चित्तदास्वाद्य विज्ञाय रसमाधुरीम् ।
ततस्तेऽहं प्रदास्यामि मा भूद्विरसभक्षणम् ॥

तथैव कृत्वा निवेदयति ।

लक्ष्मणः—(आत्मगतम्) अहो भक्त्युद्रेकात् सदाचारो अनया उल्लंघितः । धिगेनामसमीक्ष्यकारिणीम् ।

श्रीरामः—(फलानि स्वीकृत्य अश्नन्) (शबरीमुद्दिश्य)

फलानीमानि ते साध्वि प्रकृत्या रसवन्त्यपि ।
कृतान्यधिकमाधुर्याण्यास्वाद्य निहितानि मे ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(तदानीं शबरी रामस्य विश्वरूपं पश्यन्ती परमं विस्मयं सन्तोषं च भजते ।)

लक्ष्मणः—(आत्मगतम्) इदं पुनरतिविपरीतं यदग्रजेनाभिहितम् । अथवा

यद् यद् दत्तं प्रपन्नेन परिहार्यमसम्मतम् ।
तत्तद् गृह्णाति भगवान् परिग्राह्यमिव प्रियम् ॥

तथाप्ययं धर्मसन्देहो न निवर्तते—कथं रामः उच्छिष्टोपहारं स्वीकृतवानिति । भवतु मार्गमध्ये पृच्छामि ।

शबरी—(रामं स्तौति)

सकलभुवनरक्षादक्षसर्वान्तरात्मन्
निगमविनुत शौरे द्वन्द्वजालातिदूर ।
मयि हि करुणयैवागम्य चात्र प्रपूता-
मसि किल कृतवांस्त्वं मामिमां पर्णशालाम् ॥

तं भवन्तम्—

नवमेचकमेघविभासितनुं तटिदाभसुवर्णलसद्वसनम् ।
मदसिन्धुरराजविलासगतिं करुणानिलयं कलये सततम् ॥
अधरामलमञ्जुलरक्तरुचिं सुमनोहरमौक्तिकरुग्रदनम् ॥
मधुरस्मितमुग्धमुखांबुरुहं करुणानिलयं कलये सततम् ॥
सागरवर्यसुताहृदयेशं सागरसुन्दरमन्दिरवासम् ।
सागरसन्निभधीरगभीरं कारुणिकं परमं कलयेहम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सजलाम्बुदनिभमेचकरुचिमञ्जुलवपुषं
विमलामृतकिरणद्युति जयशीलसुहसितम् ।
बहिरागत करुणारस परिपूरितनयनं
घनकार्मुकवरशोभितमनिशं हृदि कलये ॥

गुणितं गुणरहितं मुनिजनमानसनिलयं
जगदादिभरणसंहृति करमीश्वरमभवम् ।
तनुमानसवचनातिगनिजवैभवमहितं
पुनरागति रहिताद्भुतपदमात्मनि कलये ॥

सचराचरजगदन्वलिसदनं जगदवनं
रविपावक शशितारकततिदीपकसुषमम् ।
अभवं भवहरणं सुखनिलयं वरयमिमां
अतिनिर्मलमनसामतिसुलभं हृदि कलये ॥

त्वदीय सन्दर्शन दिव्यलाभः
सुदुर्लभो हि त्रिदशोत्तमानाम् ।
दृष्टं मयाऽहो तव विश्वरूपं
सायुज्यमेवाभिलषाम्यहं ते ॥

श्रीरामः—भवति ! परितुष्टोऽसि तवानया सपर्यया । इतस्स्वर्गमारुह्य अचिरादेव पूर्णकामा भविष्यसि । तदनुजानीहि गमनाय ।

[शबरी श्रीरामं नमस्कृत्य पुनः समाधिनिष्ठा भवति । सलक्ष्मणः सोऽपि कुटीरतो निर्गच्छति]

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लक्ष्मणः—(श्रीराममुद्दिश्य) अद्य परमविस्मयकरं दृष्टवानस्मि ।

श्रीरामः - किं तत् ?

लक्ष्मणः—इतः पूर्वं सुहृदा भक्तिपरवशेन गुहेन दीयमानं मृष्टान्नं भवान्निरकार्षीत् । भरद्वाजादिभिर्मुनिभिश्च नियतात्मभिरेव आचारपूतमेव आतिथ्यं प्रत्यग्रहीत् । तत्कथमद्य प्राकृतयाऽनया शबर्या दत्तेनोच्छिष्टेन तुष्टवान् ।

श्रीरामः—(सस्मितम्)

साधु पृष्टं त्वया भ्रातः शबरीसंगमेन च ।
प्रश्नेन च तवानेन स्वस्य सर्वात्मभावताम् ॥
लीलानरावतारः सन् सुष्ठ्वहं स्मारितः शृणु ।
आदौ त्वामेव तत्किञ्चित् तावत् पृच्छामि लक्ष्मण ॥
किमर्प्यते भगवते सर्वमेवामलं नवम् ?

लक्ष्मणः – नैवं दृश्यते । फलपुष्पतोयानि पूजादिषु सन्निधापितानि भृङ्गमीनैः जुष्टपूर्वाण्येव । गृहेषु च पाकसिद्धानि भक्ष्यादीनि अनाघ्राणदूषितानि इति नैव वक्तुं शक्यते । अत एव तद्दोषनिवारणार्थं मन्त्रा अपि प्रवृत्ताः ।

श्रीरामः—ब्रूहीदमपि मे सौम्य किं वा सर्वोऽपि साधकः
विषयाजुष्टमात्मानं विनिवेदयितुं क्षमः ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लक्ष्मणः—नैवेत्येव वक्तव्यम् । यथा प्रथमप्रसूतं फलं कर्षकैः तृणादिना बध्वा पृथक्कृत्य उपनिधित्वेन स्थाप्यते इष्टदेवतार्थं, तद्वदात्मानं विषयैरनवलीढं स्वच्छं ईश्वराय समर्पितुं द्वित्रा एव महात्मानः समर्थाः ।

श्रीरामः—यथा भवान् (लक्ष्मणः विनयलज्जितो भवति) तुष्यामि तवानया सूक्ष्मया बुद्ध्या । एवमेव विजानीहि शबरीमन्तरा अपि ।

लक्ष्मणः - विषयानुपभुञ्जानस्य चेश्वरमपि सेवमानस्य जन-बाहुल्यस्य प्रतीकभूता शबरीति प्रतिभाति मे ।

श्रीरामः— तथा न । शबर्या भुक्तार्पितानि फलान्येव विषयसन्दष्टानि जीववृन्दानि । चिरजीविनी सिद्ध-शबरी तु अनादिरनन्ता शब्दादिविषयराजिरेव ।

लक्ष्मणः— विषयानेव खलु जीवा निर्विशन्ति न तु तैरद्यन्ते ।

श्रीरामः—तैरद्यमानैस्तेप्यद्यन्ते " अद्यतेऽत्ति च भूतानि " इति हि श्रुतिः ।

लक्ष्मणः—अहो रहस्याद्भुतोऽयं सन्दर्भः । प्रायेण भुक्त-दत्तमेव अकृत्रिमतया योग्यतरं भवति । अपि च

सानुग्रहेण भवताऽद्य मयि प्रभोऽहं
दिव्येन लोचनपुटेन विबोधितेन ।

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पश्यामि ते भुवनमङ्गल विश्वरूपं
पापापहं नतसमुद्धरणं महात्मन् ॥

एतदर्थसमर्थनायैव भगवतस्तव परमात्मनो पुरुषोत्तमस्य सीतायाः प्रकृतिरूपिण्या मायापरनाम्नो देव्याः परिचर्याप्यनुमोदितेति मन्ये ।

श्रीरामः—(साङ्गीकारम्) भवतु प्रकृतमनुसरावः । ऋष्यमूकपर्वतप्रान्तमनुप्राप्तौ स्व इति मन्ये । यदत्र विटपमाल्यधारिणो वानरा इतस्ततः परिभ्रमन्ति ।
किमपि प्रष्टव्यान्तरमस्ति वा ?

लक्ष्मणः—न किमपि । तथापीदमस्तु –

जगद्देवः पायात् सहजनिजमाया भगवती
भवांश्चासौ वैदेह्यपि यदवतारौ प्रभवतः ।
तथा चैवं लोकं प्रतिविषयसंदंशमधुरं
स्वमात्मानं यस्मै कलयति च नैवेद्यमिव यः ॥

(निष्क्रान्तौ)

इति शम्

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# मुरारि मुरली

कालिन्दीवीचिकानीतमन्दशीतलमारुते ।
वृन्दावने स्फुरच्चन्द्रचन्द्रिकास्निग्धसैकते ॥

राधिकाहृदयाम्भोजस्वच्छतामिव विन्दति ।
सुधांशौ पुण्डरीकायमाने व्योमसरोवरे ॥

गोपादमुद्रासङ्घातशोभिते यमुनातटे ।
कस्यापि नीलबालस्य जयन्ति मुरलीरवाः ॥

अविदित्वैव नः साक्षात् केवलं भाविता सती ।
गोपचूडामणेर्गीतिस्तनोति परमां मुदम् ॥

लोके कलासु सर्वासु मधुरा ललिताः कलाः ।
तत्रापि संगीतकला तत्र वेणुरवो हरेः ॥

श्रुते साधारणे गाने चित्तमावर्जितं भवेत् ।
कृष्णाधरसुधापूर्णे किं पुनर्मुरलीरवे ॥

मनुष्या गच्छेयुः प्रमदमनिदंवाच्यममलं
प्रतिध्वानं दद्यात् प्रकृतिरखिला चेतनमयी ।
द्रवेयुर्ग्रावाणो भुवि किसलयेयुस्तरुगणा
लसर्त्पिञ्छापीडे मधुरमुरलीं गायति हरौ ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कालिन्दीतटसीम्नि सैकतमये मन्दानिलैः सुन्दरे
चञ्चच्छारदचन्द्र कान्तिसुभगे शान्तिप्रसन्नान्तरे ।
वृन्दारण्य महाविहारसमये तस्मिन् दिदृक्षाम्यहम्
त्वां गोपीर्मुरळीरवामृतरसानास्वादयन्तं मुदा ॥

कारुण्यपूरस्य कटाक्षजस्य
स्मितप्रवाहस्य च वक्त्रजस्य ।
रागापगाया मुरळी भुवस्ते
तीर्थे त्रिवेण्यां जगदाप्लुतं नु ॥

तत्त्वावबोधं यमिनां कवित्व
बोधं कवीनामपि किन्नरीणाम् ।
गानप्रबोधं भजतामकार्षुः
सुखैकबोधं तव वेणुनादाः ॥

वाणी वेदवनीविहाररसिका वीणां रसप्राणितैः
रागैर्गानकलारहस्यपिशुनै रासारयन्ती तव ।
श्रुत्वा वेणुसमुद्भवान् नवरवां स्त्यक्त्वा विपञ्चींस्वका-
माश्चर्यप्रमदावधानभरितस्वान्तावतस्थे ध्रुवम् ॥

हृद्यं कर्णरसायनं तव च यद्गीतं तदानींतनं
गोपीचित्तहरं प्रतिध्वनति तद्भूयोऽद्य वेणूद्भवम् ।
पर्णानां मरुतां पयोधिसरितां रावेषु च प्राणिनां
लोके नादमयीमजस्रमखिले सञ्जीवयच्चेतनाम् ॥

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

या गीतिः परमात्मबोधचतुरा संमोहयन्ती जगद्
वंशीनाळमुखात्त्वजनि तदा गम्भीरसूत्रात्मना ।
तस्या एव सविस्तरं महदभूत् पश्चान्महाभारते
व्याख्यानं कृतमर्जुनं किल निमित्तीकृत्य गीतात्मना ॥

आनन्दादभिजायते च जगदानन्देन संवर्धते
तस्मिन्नेव विलीयतेऽपि पुनरानन्दे भवल्लीलया ।
आनन्दश्च तव स्वरूपमिति वेदान्ते समाम्नायते
स त्वं वेणुरवोर्मिषु प्रतिपदं भासि प्रभो सर्वथा ॥

वंशीनादरवामृतश्वसितमात्मीयं मनोवल्लकी
तन्त्रीषु प्रतिसारयाऽस्तु कृपया कारुण्यसिन्धो मम ।
गानोन्मादवशात्ततो विषयसंबन्धान्विहायस्फुट त- याड्
न्नादोर्मिप्रकटेष्वहं परमहंसत्वं यतोऽवाप्नुयाम् ॥ २ ।

गानं यन्मधुरं भवन्मुरलिकासन्ध्यानं समस्तं जगत्
कृत्वानादतरङ्गसन्तति निरुच्छ्वासं पुनः शान्तिदम् ।

---

मौनं मौनवतां मनोहरतरं भूत्वा क्वचिन्निस्तुला-
नन्दोल्लासरसश्रियं दिशति तन्नः श्रेयसां याश्रये ॥



CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# विशेषांशाः

| Page | Line | | Read | instead of |
|---|---|---|---|---|
| 8 | 5 | | उच्छिष्टं | उच्चिष्टं |
| 4 | 12 | Valmiki's usage | विटपी(न्) | सुतरून् |
| 10 | 1 | | सौमित्रिं | सौमित्रीं |
| 11 | 9 | | मसंभवैः | मभवैः |
| | 17–18 | | चारोऽनया | चारो अनया |
| 13 | 5 | | गुणिनं | गुणितं |
| | 11–12 | | वरयमिनामति | वरयमिमां अति |
| 15 | 3 | | यथेष्टं before विषयै | |
| | 4 | | समर्पयितुं instead of समर्पितुं. | |
| 16 | 3 | | परमात्मनः | परमात्मनो |
| | 4 | | नाम्न्या | नाम्नो |
| | 13 | | जैवं | चैवं |
| 18 | 9 | | धं | ध |
| 19 | 3 | | कृतम | महद |
| | 4 | | महद | कृतम |
| | 9 | | वंशीनाळ | घंशीनाद |
| | 11 | | हायाश्च | हायाश्चा |
| | 12 | | प्रकरे | प्रकटे |

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## OTHER WORKS BY THE AUTHOR

I. Published :

1) Citsukha's Contribution To Advaita
(Ph. D. Thesis : English)

2) Vimarshas tatpadair eva
A Poetic Criticism (Sanskrit
Poems with Tika)

3) Andhrapadya Gitanjali
(Telugu Poem)

4) Nelavanka ( ,, ,, )

II. To be Published :

5) The Philosophy of
Sri Ramana Gita (English)

6) Paratmastuti with Tika (Sanskrit)

7) Celikanuka & Santaranam
(Telugu Poems)

III. Under Preparation :

8) Sahityavamsah (Sanskrit Verse)
(An Objective Guid
of Sanskrit Lit

Sree Kantha Power Press, M

CC-O. Prof. Satya Vrat Shastri Collection. Digitized By Siddhanta eGangotri Gyaan Kosha